vyoma
॥ व्याप धनुमुपासते ॥
Samskrtam . Samskrtih . Samskarah

# Raghuvamsha - Detailed Explanation of Sarga 6

# रघुवंशः - षष्ठः सर्गः (प्रतिपदार्थविवरणम्)

Teacher
M.A. Alwar

## ६.१ । 6.1

स तत्र मञ्चेषु मनोज्ञवेषान्सिंहासनस्थानुपचारवत्सु ।
वैमानिकानां मरुतामपश्यदाकृष्टलीलान्नरलोकपालान् ॥

### पदविभागः

सः, तत्र, मञ्चेषु, मनोज्ञवेषान्, सिंहासनस्थान्, उपचारवत्सु, वैमानिकानाम्, मरुताम्, अपश्यत्, आकृष्टलीलान्, नर-लोक-पालान् ।

### अन्वयः

स तत्र उपचारवत्सु मञ्चेषु सिंहासनस्थान् मनोज्ञवेषान् वैमानिकानां मरुताम् आकृष्टलीलान् नरलोकपालान् अपश्यत् ।

# ६.२ । 6.2

रतेर्गृहीतानुनयेन कामं प्रत्यर्पितस्वाङ्गमिवेश्वरेण ।
काकुत्स्थमालोकयतां नृपाणां मनो बभूवेन्दुमतीनिराशम् ॥

## पदविभागः

रतेः, गृहीत-अनुनयेन, कामम्, प्रत्यर्पित-स्व-अङ्गम्, इव, ईश्वरेण, काकुत्स्थम्, आलोकयताम्, नृपाणाम्, मनः, बभूव, इन्दुमती-निराशम् ।

## अन्वयः

रतेः गृहीतानुनयेन ईश्वरेण प्रत्यर्पितस्वाङ्गम् कामम् इव (स्थितम्) काकुत्स्थम् आलोकयताम् नृपाणाम् मनः इन्दुमतीनिराशम् बभूव ।

# ६.३ । 6.3

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशावस्तुङ्गं नगोत्सङ्गमिवारुरोह ॥

## पदविभागः

वैदर्भ-निर्दिष्टम्, असौ, कुमारः, क्लृप्तेन, सोपान-पथेन, मञ्चम्, शिलाविभङ्गैः, मृगराज-शावः, तुङ्गम्, नग-उत्सङ्गम्, इव, आरुरोह ।

## अन्वयः

असौ कुमारः वैदर्भनिर्दिष्टं मञ्चं क्लृप्तेन सोपानपथेन मृगराजशावः शिलाविभङ्गैः तुङ्गं नगोत्सङ्गम् आरुरोह ।

# ६.४ । 6.4

परार्ध्यवर्णास्तरणोपपन्नमासेदिवान्रत्नवदासनं सः ।
भूयिष्ठमासीदुपमेयकान्तिर्मयूरपृष्ठाश्रयिणा गुहेन ॥

## पदविभागः

परार्ध्य-वर्णातरुण-उपप्पन्नम्, आसेदिवान्, रत्नवत्, आसनम्, सः, भूयिष्ठम्, आसीत्, उपमेय-कान्तिः, मयूर-पृष्ठाश्रयिणा, गुहेन ।

## अन्वयः

परार्ध्यवर्णास्तरणोपपन्नं रत्नवत् आसनम् आसेदिवान् सः, मयूरपृष्ठाश्रयिणा गुहेन भूयिष्ठम् उपमेयकान्तिः आसीत् ।

# ६.५ । 6.5

तासु श्रिया राजपरम्परासु प्रभाविशेषोदयदुर्निरीक्ष्यः ।
सहस्रधात्मा व्यरुचद्विभक्तः पयोमुचां पङ्क्तिषु विद्युतेव ॥

## पदविभागः

तासु, श्रिया, राजपरम्परासु, प्रभा-विशेष-उदय-दुर्निरीक्ष्यः, सहस्रधा, आत्मा, व्यरुचत्, विभक्तः, पयोमुचाम्, पङ्क्तिषु, विद्युता, इव ।

## अन्वयः

तासु राजपरम्परासु श्रिया पयोमुचां पङ्क्तिषु विद्युता इव सहस्रधा विभक्तः प्रभाविशेषोदयदुर्निरीक्ष्यः आत्मा व्यरुचत् ।

# ६.६ । 6.6

तेषां महार्हासनसंस्थितानामुदारनेपथ्यभृतां स मध्ये ।
रराज धाम्ना रघुसूनुरेव कल्पद्रुमाणामिव पारिजातः ॥

## पदविभागः

तेषाम्, महार्ह-आसन-संस्थितानाम्, उदार-नेपथ्य-भृताम्, सः, मध्ये, रराज, धाम्ना, रघुसूनुः, एव, कल्पद्रुमाणाम्, इव, पारिजातः ।

## अन्वयः

महार्हासनसंस्थितानाम् उदारनेपथ्यभृतां तेषां मध्ये सः रघुसूनुः एव कल्पद्रुमाणां मध्ये पारिजातः इव धाम्ना रराज ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ



नेत्रव्रजाः पौरजनस्य तस्मिन्विहाय सर्वान्नृपतीन्निपेतुः ।
मदोत्कटे रेचितपुष्पवृक्षा गन्धद्विपे वन्य इव द्विरेफाः च ॥

## पदविभागः

नेत्रवज्राः, पौरजनस्य, तस्मिन्, विहाय, सर्वान्, नृपतीन्, निपेतुः, मद-उत्कटे, रेचित-पुष्पवृक्षाः, गन्धद्विपे, वन्ये, इव, द्विरेफाः ।

## अन्वयः

पौरजनस्य नेत्रवज्राः सर्वान् नृपतीन् विहाय मदोत्कटे वन्ये गन्धद्विपे रेचितपुष्पवृक्षाः द्विरेफाः इव तस्मिन् निपेतुः ।

# ६.८ । 6.8

अथ स्तुते बन्दिभिरन्वयज्ञैः सोमार्कवंश्ये नरदेवलोके ।
सञ्चारिते चागुरुसारयोनौ धूपे समुत्सर्पति वैजयन्तीः ॥

## पदविभागः

अथ, स्तुते, बन्दिभिः, अन्वयज्ञैः, सोम-अर्कवंश्ये, नर-देव-लोके, सञ्चारिते, च, अगुरु-सार-योनौ, धूपे, समुत्सर्पति, वैजयन्तीः ।

## अन्वयः

अथ अन्वयज्ञैः बन्दिभिः सोमार्कवंश्ये नरदेवलोके स्तुते (सति) सञ्चारिते अगुरुसारयोनौ धूपे च वैजयन्तीः समुत्सर्पति (सति) ।

# ६.९ । 6.9

पुरोपकण्ठोपवनाश्रयाणां कलापिनामुद्धतनृत्यहेतौ ।
प्रध्मातशङ्खे परितो दिगन्तांस्तूर्यस्वने मूर्छति मङ्गलार्थे ॥

## पदविभागः

पुर-उपकण्ठ-उप-वनाश्रयाणाम्, कलापिनाम्, उद्धत-नृत्य-हेतौ, प्रध्मात-शङ्खे, परितः, दिगन्तान्, तूर्यस्वने, मूर्छति, मङ्गलार्थे ।

## अन्वयः

पुरोपकण्ठोवनाश्रयाणां कलापिनाम् उद्धतनृत्यहेतौ प्रध्मातशङ्खे मङ्गलार्थे तूर्यस्वने परितः दिगन्तान् मूर्छति (सति) ।

# ६.१० । 6.10

मनुष्यवाह्यं चतुरस्रयानमध्यास्य कन्या परिवारशोभि ।
विवेश मञ्चान्तरराजमार्गं पतिंवरा क्लृप्तविवाहवेषा ॥

## पदविभागः

मनुष्य-वाह्यम्, चतुरस्र-यानम्, अध्यास्य, कन्या, परिवारशोभि, विवेश, मञ्चान्तर-राजमार्गम्, पतिंवरा, क्लृप्त-विवाह-वेषा ।

## अन्वयः

पतिंवरा क्लृप्तविवाहवेषा कन्या मनुष्यवाह्यं परिवारशोभि चतुरस्रयानम् अध्यास्य मञ्चान्तरराजमार्गं विवेश ।

# ६.११ । 6.11

तस्मिन्विधानातिशये विधातुः कन्यामये नेत्रशतैकलक्ष्ये ।
निपेतुरन्तःकरणैर्नरेन्द्रा देहैः स्थिताः केवलमासनेषु ॥

## पदविभागः

तस्मिन्, विधान-अतिशये, विधातुः, कन्यामये, नेत्रशत-एकलक्ष्ये, निपेतुः, अन्तःकरणैः, नरेन्द्राः, देहैः, स्थिताः, केवलम्, आसनेषु ।

## अन्वयः

नरेन्द्राः नेत्रशतैकलक्ष्ये तस्मिन् विधातुः विधानातिशये कन्यामये अन्तःकरणैः निपेतुः आसनेषु केवलं देहैः स्थिताः ।

# ६.१२ । 6.12

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

## पदविभागः

ताम्, प्रति, अभिव्यक्त-मनोरथानाम्, महीपतीनाम्, प्रणय-अग्रदूत्यः, प्रवालशोभा, इव, पादपानाम्, शृङ्गारचेष्टाः, विविधाः, बभूवुः ।

## अन्वयः

तां प्रति अभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः विविधाः शृङ्गारचेष्टाः पादपानां प्रवालशोभा इव बभूवुः ।

# ६.१३ । 6.13

कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् ।
रजोभिरन्तः परिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥

## पदविभागः

कश्चित्, कराभ्याम्, उपगूढनालम्, आलोलपत्र-अभिहतद्विरेफम्, रजोभिः, अन्तः, परिवेषबन्धि, लीलारविन्दम्, भ्रमयाञ्चकार ।

## अन्वयः

कश्चित् कराभ्याम् उपगूढनालम् आलोलपत्राभिहतद्विरेफं रजोभिः अन्तः परिवेषबन्धि लीलारविन्दम् भ्रमयाञ्चकार ।

Vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ

# ६.१४ । 6.14

विस्रस्तमंसादपरो विलासी रत्नानुविद्धाङ्गदकोटिलग्नम् ।
प्रालम्बमुत्कृष्य यथावकाशं निनाय साचीकृतचारुवक्त्रः ॥

## पदविभागः

विस्रस्तम्, अंसात्, अपरः, विलासी, रत्नानुविद्धाङ्गदकोटिलग्नम्, प्रालम्बम्, उत्कृष्य, यथावकाशम्, निनाय, साचीकृतचारुवक्त्रः ।

## अन्वयः

अपरः विलासी अंसात् विस्रस्तं रत्नानुविद्धाङ्गदकोटिलग्नं प्रालम्बम् उत्कृष्य साचीकृतचारुवक्त्रः सन् यथावकाशं निनाय ।

# ६.१५ । 6.15

आकुञ्चिताग्राङ्गुलिना ततोऽन्यः किञ्चित्समावर्जितनेत्रशोभः ।
तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं विलिलेख पीठम् ॥

## पदविभागः

आकुञ्चित-अग्राङ्गुलिना, ततः, अन्यः, किञ्चित्, समावर्जित-नेत्र-शोभः, तिर्यग्विसंसर्पि-नखप्रभेण, पादेन, हैमं, विलिलेख, पीठम् ।

## अन्वयः

ततः अन्यः किञ्चित् समावर्जितनेत्रशोभः सन् आकुञ्चिताग्राङ्गुलिना तिर्यग्विसंसर्पिनखप्रभेण पादेन हैमं पीठं विलिलेख ।

# ६.१६ । 6.16

निवेश्य वामं भुजमासनार्धे तत्सन्निवेशादधिकोन्नतांसः ।
कश्चिद्विवृत्तत्रिकभिन्नहारः सुहृत्समाभाषणतत्परोऽभूत् ॥

## पदविभागः

निवेश्य, वामम्, भुजम्, आसनार्धे, तत्-सन्निवेशात्, अधिक-उन्नतांसः, कश्चित्, विवृत्त-त्रिक-भिन्नहारः, सुहृत्-समाभाषण-तत्परः, अभूत् ।

## अन्वयः

कश्चित् वामं भुजम् आसनार्धे निवेश्य तत्सन्निवेशात् अधिकोन्नतांसः सन् विवृत्तत्रिकभिन्नहारः सन् सुहृत्समाभाषणतत्परः अभूत् ।

# ६.१७ । 6.17

विलासिनीविभ्रमदन्तपत्रमापाण्डुरं केतकबर्हमन्यः ।
प्रियानितम्बोचितसन्निवेशैर्विपाटयामास युवा नखाग्रैः ॥

## पदविभागः

विलासिनी-विभ्रम-दन्तपत्रम्, आपाण्डुरम्, केतक-बर्हम्, अन्यः, प्रिया-नितम्ब-उचितसन्निवेशैः, विपाटयामास, युवा, नख-अग्रैः ।

## अन्वयः

अन्यः युवा विलासिनीविभ्रमदन्तपत्रम् आपाण्डुरं केतकबर्हं प्रियानितम्बोचितसन्निवेशैः नखाग्रैः विपाटयामास ।

# ६.१८ । 6.18

कुशेशयाताम्रतलेन कश्चित्करेण रेखाध्वजलाञ्छनेन ।
रत्नाङ्गुलीयप्रभयानुविद्धानुदीरयामास सलीलमक्षान् ॥

## पदविभागः

कुशेशया-ताम्रतलेन, कश्चित्, करेण, रेखा-ध्वज-लाञ्छनेन, रत्न-अङ्गुलीयप्रभया, अनुविद्धान्, उदीरयामास, सलीलम्, अक्षान् ।

## अन्वयः

कश्चित् कुशेशयाताम्रतलेन रेखाध्वजलाञ्छनेन करेण रत्नाङ्गुलीयप्रभया अनुविद्धान् अक्षान् सलीलम् उदीरयामास ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ



कश्चिद्यथाभागमवस्थितेऽपि स्वसन्निवेशाद्व्यतिलङ्घिनीव ।
वज्रांशुगर्भाङ्गुलिरन्ध्रमेकं व्यापारयामास करं किरीटे ॥

## पदविभागः

कश्चित्, यथाभागम्, अवस्थिते, अपि, स्व-सन्निवेशात्, व्यतिलङ्घिनी, इव, वज्रांशु-गर्भ-अङ्गुलि-रन्ध्रम्, एकम्, व्यापारयामास, करम्, किरीटे ।

## अन्वयः

कश्चित् यथाभागम् अवस्थिते अपि स्वसन्निवेशात् व्यतिलङ्घिनी इव किरीटे वज्रांशुगर्भाङ्गुलिरन्ध्रम् एकं करं व्यापारयामास ।

# ६.२० । 6.20

ततो नृपाणां श्रुतवृत्तवंशा पुंवत्प्रगल्भा प्रतिहाररक्षी ।
प्राक्सन्निकर्षं मगधेश्वरस्य नीत्वा कुमारीमवदत्सुनन्दा ॥

## पदविभागः

ततः, नृपाणाम्, श्रुत-वृत्तवंशा, पुंवत्, प्रगल्भा, प्रतिहार-रक्षी, प्राक्, सन्निकर्षम्, मगध-ईश्वरस्य, नीत्वा, कुमारीम्, अवदत्, सुनन्दा ।

## अन्वयः

ततः नृपाणां श्रुतवृत्तवंशा पुंवत् प्रगल्भा प्रतिहाररक्षी सुनन्दा प्राक् कुमारीं मगधेश्वरस्य सन्निकर्षम् नीत्वा अवदत् ।

# ६.२१ । 6.21

असौ शरण्यः शरणोन्मुखानामगाधसत्त्वो मगधप्रतिष्ठः ।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा ॥

## पदविभागः

असौ, शरण्यः, शरण-उन्मुखानाम्, अगाधसत्त्वः, मगध-प्रतिष्ठः, राजा, प्रजा-रञ्जन-लब्ध-वर्णः, परन्तपः, नाम, यथार्थ-नामा ।

## अन्वयः

असौ राजा शरणोन्मुखानां शरण्यः अगाधसत्त्वः मगधप्रतिष्ठः प्रजारञ्जनलब्धवर्णः परन्तपः नाम यथार्थनामा ।

# ६.२२ । 6.22

कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिं ।
नक्षत्रताराग्रहसङ्कुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥

## पदविभागः

कामम्, नृपाः, सन्तु, सहस्रशः, अन्ये, राजन्वतीम्, आहुः, अनेन, भूमिम्, नक्षत्र-तारा-ग्रह-सङ्कुला, अपि, ज्योतिष्मती, चन्द्रमसा, एव, रात्रिः ।

## अन्वयः

अन्ये नृपाः कामं सहस्रशः सन्तु, भूमिम् अनेन राजन्वतीम् आहुः । नक्षत्रताराग्रहसङ्कुला अपि रात्रिः चन्द्रमसा एव ज्योतिष्मती ।

# ६.२२ । 6.23

क्रियाप्रबन्धादयमध्वराणामजस्रमाहूतसहस्रनेत्रः ।
शच्याश्चिरं पाण्डुकपोललम्बान्मन्दारशून्यानलकांश्चकार ॥

## पदविभागः

क्रियाप्रबन्धात्, अयम्, अध्वराणाम्, अजस्रम्, आहूत-सहस्रनेत्रः, शच्याः, चिरम्, पाण्डु-कपोल-लम्बान्, मन्दार-शून्यान्, अलकान्, चकार ।

## अन्वयः

अयम् अध्वराणां क्रियाप्रबन्धात् अजस्रम् आहूतसहस्रनेत्रः सन् शच्याः पाण्डुकपोललम्बान् अलकान् मन्दारशून्यान् चकार ।

# ६.२४ । 6.24

अनेन चेदिच्छसि गृह्यमाणं पाणिं वरेण्येन कुरु प्रवेशे ।
प्रासादवातायनसंश्रितानां नेत्रोत्सवं पुष्पपुराङ्गनानाम् ॥

## पदविभागः

अनेन, चेत्, इच्छसि, गृह्यमाणम्, पाणिम्, वरेण्येन, कुरु, प्रवेशे, प्रासाद-वातायन-संश्रितानाम्, नेत्र-उत्सवम्, पुष्प-पुर-अङ्गनानाम् ।

## अन्वयः

वरेण्येन अनेन गृह्यमाणं पाणिम् इच्छसि चेत् प्रवेशे प्रासादवातायनसंश्रितानां पुष्पपुराङ्गनानां नेत्रोत्सवं कुरु ।

# ६.२५। 6.25

एवं तयोक्ते तमवेक्ष्य किञ्चिद्विस्रंसिदूर्वाङ्कमधूकमाला ।
ऋजुप्रणामक्रिययैव तन्वी प्रत्यादिदेशैनमभाषमाणा ॥

## पदविभागः

एवम्, तया, उक्ते, तम्, अवेक्ष्य, किञ्चित्, विस्रंसि-दूर्वाङ्क-मधूकमाला, ऋजु-प्रणाम-क्रियया, एव, तन्वी, प्रति-आदिदेश, एनम्, अभाषमाणा ।

## अन्वयः

एवं तया उक्ते तम् अवेक्ष्य किञ्चित् विस्रंसिदूर्वाङ्कमधूकमाला तन्वी एनम् अभाषमाणा ऋजुप्रणामक्रियया एव प्रत्यादिदेश ।

# ६.२६ । 6.26

तां सैव वेत्रग्रहणे नियुक्ता राजान्तरं राजसुतां निनाय ।
समीरणोत्थेव तरङ्गलेखा पद्मान्तरं मानसराजहंसीम् ॥

## पदविभागः

ताम्, सा, एव, वेत्रग्रहणे, नियुक्ता, राजान्तरम्, राजसुताम्, निनाय, समीरण-उत्था, इव, तरङ्ग-लेखा, पद्मान्तरम्, मानस-राजहंसीम् ।

## अन्वयः

समीरणोत्था तरङ्गलेखा मानसराजहंसीं पद्मान्तरम् इव वेत्रग्रहणे नियुक्ता सा एव तां राजसुतां राजान्तरं निनाय ।

# ६.२७ । 6.27

जगाद चैनामयमङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः ।
विनीतनागः किल सूत्रकारैरैन्द्रं पदं भूमिगतोऽपि भुङ्क्ते ॥

## पदविभागः

जगाद, च, एनाम्, अयम्, अङ्गनाथः, सुराङ्गना-प्रार्थित-यौवनश्रीः, विनीतनागः, किल, सूत्रकारैः, ऐन्द्रम्, पदम्, भूमिगतः, अपि, भुङ्क्ते ।

## अन्वयः

एनां जगाद च (सुनन्दा) अयम् अङ्गनाथः सुराङ्गनाप्रार्थितयौवनश्रीः सूत्रकारैः विनीतनागः किल (अत एव) भूमिगतः अपि ऐन्द्रं पदं भुङ्क्ते (इति) ।

# ६.२८ । 6.28

अनेन पर्यासयताश्रुबिन्दून्मुक्ताफलस्थूलतमान्स्तनेषु ।
प्रत्यर्पिताः शत्रुविलासिनीनामुन्मुच्य सूत्रेण विनैव हाराः ॥

## पदविभागः

अनेन, पर्यासयता, अश्रुबिन्दून्, मुक्ताफल-स्थूलतमान्, स्तनेषु, प्रत्यर्पिताः, शत्रु-विलासिनीनाम्, उन्मुच्य, सूत्रेण, विनैव हाराः ।

## अन्वयः

शत्रुविलासिनीनाम् स्तनेषु मुक्ताफलस्थूलतमान् अश्रुबिन्दून् पर्यासयता अनेन उन्मुच्य सूत्रेण विना हाराः एव प्रत्यर्पिताः ।

# ६.२९ । 6.29

निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया ॥

## पदविभागः

निसर्ग-भिन्न-आस्पदम्, एक-संस्थम्, अस्मिन्, द्वयम्, श्रीः, च, सरस्वती, च, कान्त्या, गिरा, सूनृतया, च, योग्या, त्वम्, एव, कल्याणि, तयोः, तृतीया ।

## अन्वयः

निसर्गभिन्नास्पदं श्रीः च सरस्वती च इति द्वयम् अस्मिन् (राज्ञि) एकसंस्थम् । हे कल्याणि, कान्त्या सूनृतया गिरा च योग्या त्वमेव तयोः तृतीया ।

# ६.३० | 6.30

अथाङ्गराजादवतार्य चक्षुर्याहीति कन्यामवदत्कुमारी ।
नासौ न काम्यो न च वेद सम्यग्द्रष्टुं न सा भिन्नरुचिर्हि लोकः ॥

## पदविभागः

अथ, अङ्गराजात्, अवतार्य, चक्षुः, याहि, इति, कन्याम्, अवदत्, कुमारी, न, असौ, न, काम्यः, न, च, वेद, सम्यक्, द्रष्टुम्, न, सा, भिन्नरुचिः, हि, लोकः ।

## अन्वयः

अथ कुमारी अङ्गराजात् चक्षुः अवतार्य कन्यां याहि इति अवदत् । असौ काम्यः न इति न, सा सम्यक् द्रष्टुं न वेद इति न, लोकः हि भिन्नरुचिः (भवति) ।

# ६.३१ । 6.31

ततः परं दुष्प्रसहं द्विषद्भिर्नृपं नियुक्ता प्रतिहारभूमौ ।
निदर्शयामास विशेषदृश्यमिन्दुं नवोत्थानमिवेन्दुमत्यै ॥

## पदविभागः

ततः, परम्, दुष्प्रसहम्, द्विषद्भिः, नृपम्, नियुक्ता, प्रतिहार-भूमौ, निदर्शयामास, विशेष-दृश्यम्, इन्दुम्, नव-उत्थानम्, इव, इन्दुमत्यै ।

## अन्वयः

ततः प्रतिहारभूमौ नियुक्ता द्विषद्भिः दुष्प्रसहं विशेषदृश्यं परं नृपं नवोत्थानम् इन्दुम् इव इन्दुमत्यै निदर्शयामास ।

# ६.३२ । 6.32

अवन्तिनाथोऽयमुदग्रबाहुर्विशालवक्षास्तनुवृत्तमध्यः ।
आरोप्य चक्रभ्रममुष्णतेजास्त्वष्ट्रेव यत्नोल्लिखितो विभाति ॥

## पदविभागः

अवन्तिनाथः, अयम्, उदग्रबाहुः, विशालवक्षाः, तनुवृत्तमध्यः, आरोप्य, चक्रभ्रमम्, उष्णतेजाः, त्वष्ट्रा, इव, यत्न-उल्लिखितः, विभाति ।

## अन्वयः

उदग्रबाहुः विशालवक्षाः तनुवृत्तमध्यः अयम् अवन्तिनाथः त्वष्ट्रा चक्रभ्रमम् आरोप्य यत्नोल्लिखितः उष्णतेजाः इव विभाति ।

# ६.३३ । 6.33

अस्य प्रयाणेषु समग्रशक्तेरग्रेसरैर्वाजिभिरुत्थितानि ।
कुर्वन्ति सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं रजांसि ॥

## पदविभागः

अस्य, प्रयागेषु, समग्र-शक्तेः, अग्रेसरैः, वाजिभिः, उत्थितानि, कुर्वन्ति, सामन्त-शिखामणीनाम्, प्रभा-प्ररोह-अस्तमयं, रजांसि ।

## अन्वयः

समग्रशक्तेः अस्य प्रयागेषु अग्रेसरैः वाजिभिः उत्थितानि रजांसि सामन्तशिखामणीनां प्रभाप्ररोहास्तमयं कुर्वन्ति ।

# ६.३४ । 6.34

असौ महाकालनिकेतनस्य वसन्नदूरे किल चन्द्रमौलेः ।
तमिस्रपक्षेऽपि सह प्रियाभिर्ज्योत्स्नावतो निर्विशति प्रदोषान् ॥

## पदविभागः

असौ, महाकाल-निकेतनस्य, वसन्, अदूरे, किल, चन्द्रमौलेः, तमिस्रपक्षे, अपि, सह, प्रियाभिः, ज्योत्स्नावतः, निर्विशति, प्रदोषान् ।

## अन्वयः

असौ महाकालनिकेतनस्य चन्द्रमौलेः न दूरे वसन् तमिस्रपक्षे अपि प्रियाभिः सह ज्योत्स्नावतः प्रदोषान् निर्विशति किल ।

# ६.३५ । 6.35

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।
सिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥

## पदविभागः

अनेन, यूना, सह, पार्थिवेन, रम्भोरु, कच्चित्, मनसः, रुचिः, ते, सिप्रा-तरङ्ग-अनिल-कम्पितासु, विहर्तुम्, उद्यान-परम्परासु ।

## अन्वयः

रम्भोरु, अनेन यूना पार्थवेन सह सिप्रातरङ्गानिलकम्पितासु उद्यानपरम्परासु विहर्तुं ते मनसः रुचिः कच्चित् ?

# ६.३६ । 6.36

तस्मिन्नभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के ।
बबन्ध सा नोत्तमसौकुमार्या कुमुद्वती भानुमतीव भावम् ॥

## पदविभागः

तस्मिन्, अभिद्योतित-बन्धुपद्मे, प्रताप-संशोषित-शत्रु-पङ्के, बबन्ध, सा, न, उत्तम-सौकुमार्या, कुमुद्वती, भानुमती, इव, भावम् ।

## अन्वयः

उत्तमसौकुमार्या सा अभिद्योतितबन्धुपद्मे प्रतापसंशोषितशत्रुपङ्के तस्मिन् कुमुद्वती भानुमती इव भावं न बबन्ध ।

# ६.३७ । 6.37

तामग्रतस्तामरसान्तराभामनूपराजस्य गुणैरनूनाम् ।
विधाय सृष्टिं ललितां विधातुर्जगाद भूयः सुदतीं सुनन्दा ॥

## पदविभागः

ताम्, अग्रतः, ताम-रसान्तराभाम्, अनूपराजस्य, गुणैः, अनूनाम्, विधाय, सृष्टिम्, ललिताम्, विधातुः, जगाद, भूयः, सुदतीम्, सुनन्दा ।

## अन्वयः

सुनन्दा तामरसान्तराभां गुणैः अनूनां सुदतीं तां विधातुः ललितां सृष्टिम् अनूपराजस्य अग्रतः विधाय भूयः जगाद ।

# ६.३८ । 6.38

सङ्ग्रामनिर्विष्टसहस्रबाहुरष्टादशद्वीपनिखातयूपः ।
अनन्यसाधारणराजशब्दो बभूव योगी किल कार्तवीर्यः ॥

## पदविभागः

सङ्ग्राम-निर्विष्ट-सहस्रबाहुः, अष्टादश-द्वीपनिखात-यूपः, अनन्य-साधारण-राजशब्दः, बभूव, योगी, किल, कार्तवीर्यः ।

## अन्वयः

सङ्ग्रामनिर्विष्टसहस्रबाहुः अष्टादशद्वीपनिखातयूपः अनन्यसाधारणराजशब्दः योगी कार्यवीर्यः बभूव किल ।

# ६.३९ । 6.39

अकार्यचिन्तासमकालमेव प्रादुर्भवंश्चापधरः पुरस्तात्।
अन्तःशरीरेष्वपि यः प्रजानां प्रत्यादिदेशाविनयं विनेता ॥

## पदविभागः

अकार्य-चिन्ता-समकालम्, एव, प्रादुर्भवन्, च, अपराधः, पुरस्तात्, अन्तः-शरीरेषु, अपि, यः, प्रजानाम्, प्रत्यादिदेश, अविनयम्, विनेता ।

## अन्वयः

विनेता यः अकार्यचिन्तासमकालम् एव पुरस्तात् च अपराधः प्रादुर्भवन् सन् प्रजानाम् अन्तःशरीरेषु अपि अविनयं प्रत्यादिदेश ।

# ६.४० । 6.40

ज्याबन्धनिष्पन्दभुजेन यस्य विनिश्वसद्वक्त्रपरम्परेण ।
कारागृहे निर्जितवासवेन लङ्केश्वरेणोषितमाप्रसादात् ॥

## पदविभागः

ज्या-बन्ध-निष्पन्द-भुजेन, यस्य, विनिःश्वसद्, वक्त्र-परम्परेण, कारागृहे, निर्जित-वासवेन, लङ्केश्वरेण, उषितम्, आप्रसादात् ।

## अन्वयः

ज्याबन्धनिष्पन्दभुजेन विनिःश्वसद् वक्त्रपरम्परेण निर्जितवासवेन लङ्केश्वरेण यस्य कारागृहे आप्रसादात् उषितम् ।

# ६.४१ । 6.41

तस्यान्वये भूपतिरेष जातः प्रतीप इत्यागमवृद्धसेवी ।
येन श्रियः संश्रयदोषरूढं स्वभावलोलेत्ययशः प्रमृष्टम् ॥

## पदविभागः

तस्य, अन्वये, भूपतिः, एषः, जातः, प्रतीपः, इति, आगम-वृद्ध-सेवी, येन, श्रियः, संश्रय-दोषरूढम्, स्वभावलोला, इति, अयशः, प्रमृष्टम् ।

## अन्वयः

आगमवृद्धसेवी प्रतीपः इति (ख्यातः) एषः भूपतिः तस्य अन्वये जातः येन संश्रयदोषरूढं श्रियः स्वभावलोला इति अयशः प्रमृष्टम् ।

# ६.४२ । 6.42

आयोधने कृष्णगतिं सहायमवाप्य यः क्षत्रियकालरात्रिम् ।
धारां शितां रामपरश्वधस्य सम्भावयत्युत्पलपत्रसाराम् ॥

## पदविभागः

अयोधने, कृष्णगतिम्, सहायम्, अवाप्य, यः,
क्षत्रिय-काल-रात्रिम्, धाराम्, शिताम्,
रामपरश्वधस्य, सम्भावयति, उत्पल-पत्र-साराम् ।

## अन्वयः

यः अयोधने कृष्णगतिं सहायम् अवाप्य
क्षत्रियकालरात्रिं रामपरश्वधस्य शितां धाराम्
उत्पलपत्रसाराम् सम्भावयति ।

# ६.४३ । 6.43

अस्याङ्कलक्ष्मीर्भव दीर्घबाहोर्माहिष्मतीवप्रनितम्बकाञ्चीम् ।
प्रासादजालैर्जलवेणिरम्यां रेवां यदि प्रेक्षितुमस्ति कामः ॥

## पदविभागः

अस्य, अङ्कलक्ष्मीः, भव, दीर्घबाहोः, माहिष्मती, वप्र-नितम्ब-काञ्चीम्, प्रासादजालैः, जल-वेणि-रम्याम्, रेवाम्, यदि, प्रेक्षितुम्, अस्ति, कामः ।

## अन्वयः

यदि माहिष्मती इव प्रनितम्बकाञ्चीं जलवेणिरम्यां रेवां प्रासादजालैः प्रेक्षितुं कामः अस्ति अस्य दीर्घबाहोः अङ्कलक्ष्मीः भव ।

# ६.४४ । 6.44

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रमृष्टाम्बुधरोपरोधः शशीव पर्याप्तकलो नलिन्याः ॥

## पदविभागः

तस्याः, प्रकामम्, प्रियदर्शनः, अपि, न, सः, क्षितीशः, रुचये, बभूव, शरत् प्रमृष्ट-अम्बुधर-उपरोधः, शशी, इव, पर्याप्तकलः, नलिन्याः ।

## अन्वयः

प्रकामं प्रियदर्शनः अपि सः क्षितीशः शरत्प्रमृष्टाम्बुधोपरोधः पर्याप्तकलः शशी नलिन्याः इव तस्याः रुचये न बभूव ।

# ६.४५ । 6.45

सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्तिम् ।
आचारशुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी ॥

## पदविभागः

सा, शूरसेन-अधिपतिम्, सुषेणम्, उद्दिश्य, लोकान्तर-गीत-कीर्तिम्, आचार-शुद्ध-उभय-वंश-दीपम्, शुद्धान्तरक्ष्या, जगदे, कुमारी ।

## अन्वयः

लोकान्तरगीतकीर्तिम् आचारशुद्धोभयवंशदीपं शूरसेनाधिपतिं सुषेणम् उद्दिश्य शुद्धान्तरक्ष्या सा कुमारी जगदे ।

# ६.४६ । 6.46

नीपान्वयः पार्थिव एष यज्वा गुणैर्यमाश्रित्य परस्परेण ।
सिद्धाश्रमं शान्तमिवैत्य सत्त्वैर्नैसर्गिकोऽप्युत्ससृजे विरोधः ॥

## पदविभागः

नीप-अन्वयः, पार्थिवः, एषः, यज्वा, गुणैः, यम्, आश्रित्य, परस्परेण, सिद्धाश्रमम्, शान्तम्, इव, एत्य, सत्त्वैः, नैसर्गिकः, अपि, उत्ससृजे, विरोधः ।

## अन्वयः

यज्वा एषः पार्थिवः नीपान्वयः, यम् आश्रित्य गुणैः शान्तं, सिद्धाश्रमम् एत्य सत्त्वैः इव नैसर्गिकः विरोधः अपि परस्परेण उत्ससृजे ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ



यस्यात्मगेहे नयनाभिरामा कान्तिर्हिमांशोरिव सन्निविष्टा ।
हर्म्याग्रसंरूढतृणाङ्कुरेषु तेजोऽविषह्यं रिपुमन्दिरेषु ॥

## पदविभागः

यस्य, आत्मगेहे, नयनाभिरामा, कान्तिः, हिमांशोः, इव, सन्निविष्टा, हर्म्य-अग्र-संरूढ-तृण-अङ्कुरेषु, तेजः, अविषह्यम्, रिपु-मन्दिरेषु ।

## अन्वयः

हिमांशोः कान्तिः इव नयनाभिरामा यस्य कान्तिः आत्मगेहे सन्निविष्टा अविषह्यम् तेजः हर्म्याग्रसंरूढतृणाङ्कुरेषु रिपुमन्दिरेषु सन्निविष्टम् ।

# ६.४८ । 6.48

यस्यावरोधस्तनचन्दनानां प्रक्षालनाद्वारिविहारकाले ।
कलिन्दकन्या मथुरां गताऽपि गङ्गोर्मिसंसक्तजलेव भाति ॥

## पदविभागः

यस्य, अवरोध-स्तन-चन्दनानाम्, प्रक्षालनात्, वारि-विहार-काले, कलिन्द-कन्या, मथुराम्, गता, अपि, गङ्गा-ऊर्मि-संसक्त-जला इव भाति ।

## अन्वयः

वारिविहारकाले यस्य अवरोधस्तनचन्दनानां प्रक्षालनात् कलिन्द-कन्या मथुरां गता अपि गङ्गोर्मिसंसक्तजला इव भाति ।

# ६.४९ । 6.49

त्रस्तेन तार्क्ष्यात्किल कालियेन मणिं विसृष्टं यमुनौकसा यः ।
वक्षःस्थलव्यापिरुचं दधानः सकौस्तुभं ह्रेपयतीव कृष्णम् ॥

## पदविभागः

त्रस्तेन, तार्क्ष्यात्, किल, कालियेन, मणिम्, विसृष्टम्, यमुनौकसा, यः, वक्षःस्थल-व्यापिरुचम्, दधानः, सकौस्तुभम्, ह्रेपयति, इव, कृष्णम् ।

## अन्वयः

तार्क्ष्यात् त्रस्तेन यमुनौकसा कालियेन विसृष्टम्, किल वक्षःस्थलव्यापिरुचं मणिं दधानः यः सकौस्तुभं कृष्णं ह्रेपयतीव ।

# ६.५० । 6.50

सम्भाव्य भर्तारममुं युवानं मृदुप्रवालोत्तरपुष्पशय्ये ।
वृन्दावने चैत्ररथादनूने निर्विश्यतां सुन्दरि यौवनश्रीः ॥

## पदविभागः

सम्भाव्य, भर्तारम्, अमुम्, युवानम्, मृदु-प्रवाल-उत्तर-पुष्प-शय्ये, वृन्दावने, चैत्र-रथात्, अनूने, निर्विश्यताम्, सुन्दरि, यौवन-श्रीः।

## अन्वयः

सुन्दरि, युवानम् अमुं भर्तारं सम्भाव्य मृदुप्रवालोत्तरपुष्पशय्ये चैत्ररथात् अनूने वृन्दावने यौवनश्रीः निर्विश्यताम् ।

# ६.५१ । 6.51

अध्यास्य चाम्भःपृषतोक्षितानि शैलेयगन्धीनि शिलातलानि ।
कलापिनां प्रावृषि पश्य नृत्यं कान्तासु गोवर्धनकन्दरासु ॥

## पदविभागः

अध्यास्य, च, अम्भः-पृषत-उक्षितानि, शैलेय-गन्धीनि, शिला-तलानि, कलापिनाम्, प्रावृषि, पश्य, नृत्यम्, कान्तासु, गोवर्धन-कन्दरासु ।

## अन्वयः

प्रावृषि कान्तासु गोवर्धनकन्दरासु अम्भःपृषतोक्षितानि शैलोयगन्धीनि शिलातलानि अध्यास्य कलापिनां नृत्यं पश्य ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ

# ६.५२ । 6.52

नृपं तमावर्तमनोज्ञनाभिः सा व्यत्यगादन्यवधूर्भवित्री ।
महीधरं मार्गवशादुपेतं स्रोतोवहा सागरगामिनीव ॥

## पदविभागः

नृपम्, तम्, आवर्त-मनोज्ञ-नाभिः, सा, व्यत्यगात्, अन्य-वधूः, भवित्री, महीधरम्, मार्गवशात्, उपेतम्, स्रोतोवहा, सागरगामिनी, इव ।

## अन्वयः

आवर्तमनोज्ञनाभिः अन्यवधूः भवित्री सा तं नृपं सागरगामिनी स्रोतोवहा मार्गवशात् उपेतं महीधरम् इव व्यत्यगात् ।

# ६.५३ । 6.53

अथाङ्गदाश्लिष्टभुजं भुजिष्या हेमाङ्गदं नाम कलिङ्गनाथम् ।
आसेदुषीं सादितशत्रुपक्षं बालामबालेन्दुमुखीं बभाषे ॥

## पदविभागः

अथ, अङ्गद-आश्लिष्टभुजम्, भुजिष्या, हेम-अङ्गदम्, नाम, कलिङ्ग-नाथम्, आसेदुषीम्, सादित-शत्रुपक्षम्, बालाम्, अबालेन्दु-मुखीम्, बभाषे ।

## अन्वयः

अथ भुजिष्या अङ्गाश्लिष्टभुजं सादितशत्रुपक्षं हेमाङ्गदं नाम कलिङ्गनाथम् आसेदुषीम् अबालेन्दुमुखीं बालां बभाषे ।

# ६.५४ । 6.54

असौ महेन्द्राद्रिसमानसारः पतिर्महेन्द्रस्य महोदधेश्च ।
यस्य क्षरत्सैन्यगजच्छलेन यात्रासु यातीव पुरो महेन्द्रः ॥

## पदविभागः

असौ, महा-इन्द्र-अद्रि-समान-सारः, पतिः, महा-इन्द्रस्य, महा-उदधेः, च, यस्य, क्षरत्, सैन्य-गज-च्छलेन, यात्रासु, याति, इव, पुरः, महा-इन्द्रः ।

## अन्वयः

महेन्द्राद्रिसमानसारः असौ महेन्द्रस्य महोदधेः च पतिः, यस्य यात्रासु क्षरत् सैन्यगजच्छलेन महेन्द्रः पुरः याति इव ।

# ६.५५ । 6.55

ज्याघातरेखे सुभुजो भुजाभ्यां बिभर्ति यश्चापभृतां पुरोगः ।
रिपुश्रियां साञ्जनबाष्पसेके बन्दीकृतानामिव पद्धती द्वे ॥

## पदविभागः

ज्याघात-रेखे, सुभुजः, भुजाभ्याम्, बिभर्ति, यः, चाप-भृताम्, पुरोगः, रिपु-श्रियाम्, साञ्जन-बाष्पसेके, बन्दी-कृतानाम्, इव, पद्धती, द्वे ।

## अन्वयः

सुभुजः चापभृतां पुरोगः यः बन्दीकृतानां रिपुश्रियां साञ्जनबाष्पसेके पद्धती इव द्वे ज्याघातरेखे भुजाभ्यां बिभर्ति ।

# ६.५६ | 6.56

यमात्मनः सद्मनि सन्निकृष्टो मन्द्रध्वनित्याजितयामतूर्यः ।
प्रासादवातायनदृश्यवीचिः प्रबोधयत्यर्णव एव सुप्तम् ॥

## पदविभागः

यम्, आत्मनः, सद्मनि, सन्निकृष्टः, मन्द्र-ध्वनि-त्याजित-यामतूर्यः, प्रासाद-वातायन-दृश्य-वीचिः, प्रबोधयति, अर्णवः, एव, सुप्तम् ।

## अन्वयः

आत्मनः सद्मनि सुप्तं यं सन्निकृष्टः प्रासादवातायनदृश्यवीचिः मन्द्रध्वनित्याजितयामतूर्यः अर्णवः एव प्रबोधयति ।

# ६.५७ । 6.57

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपानतरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥

## पदविभागः

अनेन, सार्धम्, विहर, अम्बु-राशेः, तीरेषु, तालीवन-मर्मरेषु, द्वीपान्तर-आनीत-लवङ्ग-पुष्पैः, अपाकृत-स्वेदलवा, मरुद्भिः ।

## अन्वयः

अनेन सार्धं तालीवनमर्मरेषु अम्बराशेः तीरेषु द्वीपान्तरानीतलवङ्गपुष्पैः मरुद्भिः अपाकृतस्वेदलवा (त्वं) विहर ।

# ६.५८ । 6.58

प्रलोभिताप्याकृतिलोभनीया विदर्भराजावरजा तयैवम् ।
तस्मादपावर्तत दूरकृष्टा नीत्येव लक्ष्मीः प्रतिकूलदैवात् ॥

## पदविभागः

प्रलोभिता, अपि, आकृति-लोभनीया, विदर्भ-राज-अवरजा, तया, एवम्, तस्मात्, अपावर्तत, दूरकृष्टा, नीत्या, इव, लक्ष्मीः, प्रतिकूल-दैवात् ।

## अन्वयः

आकृतिलोभनीया विदर्भराजावरजा तया एवं प्रलोभिता अपि नीत्या दूरकृष्टा लक्ष्मीः प्रतिकूलदैवात् (पुंसः) इव तस्मात् अपावर्तत ।

# ६.५९ । 6.59

अथोराख्यस्य पुरस्य नाथं दौवारिकी देवसरूपमेत्य ।
इतश्चकोराक्षि विलोकयेति पूर्वानुशिष्टां निजगाद भोज्याम् ॥

## पदविभागः

अथ, उरग-आख्यस्य, पुरस्य, नाथं, दौवारिकी, देव-सरूपम्, एत्य, इतः, चकोराक्षि, विलोकय, इति, पूर्व-अनुशिष्टाम्, निजगाद, भोज्याम् ।

## अन्वयः

अथ दौवारिकी देवसरूपम् उरगाख्यस्य पुरस्य नाथम् एत्य हे चकोराक्षि इतः विलोकय इति पूर्वानुशिष्टां भोज्यां निजगाद ।

# ६.६० | 6.60

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन ।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः ॥

## पदविभागः

पाण्ड्यः, अयम्, अंसार्पित-लम्बहारः, क्लृप्त-अङ्गरागः, हरि-चन्दनेन, आभाति, बाल-आतपरक्त-सानुः, सनिर्झर-उद्गारः, इव, अद्रि-राजः ।

## अन्वयः

अंसार्पितलम्बहारः हरिचन्दनेन क्लृप्ताङ्गरागः अयं पाण्ड्यः बालातपरक्तसानुः सनिर्झरोद्गारः अद्रिराजः इव आभाति ।

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ

# ६.६१ । 6.61

विन्ध्यस्य संस्तम्भयिता महाद्रेर्निःशेषपीतोज्झितसिन्धुराजः ।
प्रीत्याश्वमेधावभृथार्द्रमूर्तेः सौस्नातिको यस्य भवत्यगस्त्यः ॥

## पदविभागः

विन्ध्यस्य, संस्तम्भयिता, मह-अद्रेः, निःशेष-पीत-उज्झित-सिन्धुराजः, प्रीत्या, अश्वमेध-अवभृथार्द्रमूर्तेः, सौस्नातिकः, यस्य, भवति, अगस्त्यः ।

## अन्वयः

विन्ध्यस्य महाद्रेः संस्तम्भयिता निःशेषपोज्झितसिन्धुराजः अगस्त्यः अश्वधावभृथार्द्रमूर्तेः यस्य प्रीत्या सौस्नातिकः भवति ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ



अस्त्रं हरादाप्तवता दुरापं येनेन्द्रलोकावजयाय दृप्तः ।
पुरा जनस्थानविमर्दशङ्की सन्धाय लङ्काधिपतिः प्रतस्थे ॥

## पदविभागः

अस्त्रम्, हरात्, अवाप्तवता, दुरापम्, येन, इन्द्र-लोक-अवजयाय, दृप्तः, पुरा, जनस्थान-विमर्दशङ्की, सन्धाय, लङ्का-अधिपतिः, प्रतस्थे ।

## अन्वयः

पुरा जनस्थानविमर्दशङ्की दृप्तः लङ्काधिपतिः दुरापम् अस्त्रं हरात् अवाप्तवता येन (पाण्ड्येन) सन्धाय इन्द्रलोकावजयाय प्रतस्थे ।

# ६.६३ । 6.63

अनेन पाणौ विधिवद्गृहीते महाकुलीनेन महीव गुर्वी ।
रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥

## पदविभागः

अनेन, पाणौ, विधिवत्, गृहीते, महा-कुलीनेन, मही, इव, गुर्वी, रत्न-अनुविद्ध-अर्णव-मेखलायाः, दिशः, सपत्नी, भव, दक्षिणस्याः ।

## अन्वयः

महाकुलीनेन अनेन पाणौ विधिवत् गृहीते सति गुर्वी मही इव रत्नानुविधार्णवमेखलायाः दक्षिणस्याः दिशः सपत्नी भव ।

# ६.६४ । 6.64

ताम्बूलवल्लीपरिणद्धपूगास्वेलालतालिङ्गितचन्दनासु ।
तमालपत्रास्तरणासु रन्तुं प्रसीद शश्वन्मलयस्थलीषु ॥

## पदविभागः

ताम्बूल-वल्ली-परिणद्ध-पूगासु, एला-लतालिङ्गित-चन्दनासु, तमाल-पत्र-आस्तरणासु, रन्तुम्, प्रसीद, शश्वत्, मलय-स्थलीषु ।

## अन्वयः

ताम्बूलवल्लीपरिणद्धपूगासु एलालतालिङ्गितचन्दनासु तमालपत्रास्तरणासु मलयस्थलीषु शश्वत् रन्तुं प्रसीद ।

# ६.६५ । 6.65

इन्दीवरश्यामतनुर्नृपोऽसौ त्वं रोचनागौरशरीरयष्टिः ।
अन्योन्यशोभापरिवृद्धये वां योगस्तडित्तोयदयोरिवास्तु ॥

## पदविभागः

इन्दीवर-श्याम-तनुः, नृपः, असौ, त्वम्, रोचना-गौर-शरीर-यष्टिः, अन्योन्य-शोभा-परिवृद्धये, वाम्, योगः, तडित्तॉदययोः, इव, अस्तु ।

## अन्वयः

असौ नृपः इन्दीवरश्यामतनुः, त्वं रोचनागौरशरीरयष्टिः, तडित्तोदययोः इव वां योगः अन्योन्यशोभापरिवृद्धये अस्तु ।

# ६.६६ । 6.66

स्वसुर्विदर्भाधिपतेस्तदीयो लेभेऽन्तरं चेतसि नोपदेशः ।
दिवाकरादर्शनबद्धकोशे नक्षत्रनाथांशुरिवारविन्दे ॥

## पदविभागः

स्वसुः, विदर्भ-अधिपतेः, तदीयः, लेभे, अन्तरम्, चेतसि, न, उपदेशः, दिवाकर-अदर्शनबद्ध-कोशे, नक्षत्र-नाथ-अंशुः, इव, अरविन्दे ।

## अन्वयः

विदर्भाधिपतेः स्वसुः चेतसि तदीयः उपदेशः दिवाकरादर्शनबद्धकोशे अरविन्दे नक्षत्रनांशुः इव अन्तरं न लेभे ।

# ६.६७ । 6.67

सञ्चारिणी दीपशिखेव रात्रौ यं यं व्यतीयाय पतिंवरा सा ।
नरेन्द्रमार्गाट्ट इव प्रपेदे विवर्णभावं स स भूमिपालः ॥

## पदविभागः

सञ्चारिणी, दीप-शिखा, इव, रात्रौ, यम्, यम्, व्यतीयाय, पतिंवरा, सा, नरेन्द्र-मार्गाट्ट, इव, प्रपेदे, विवर्ण-भावम्, सः, सः, भूमि-पालः ।

## अन्वयः

पतिंवरा सा रात्रौ सञ्चारिणी दीपशिखा इव यं यं व्यतीयाय सः सः भूमिपालः नरेन्द्रमार्गाट्ट इव विवर्णभावं प्रपेदे ।

# ६.६८ । 6.68

तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत् ।
वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद ॥

## पदविभागः

तस्याम्, रघोः, सूनुः, उपस्थितायाम्, वृणीत, माम्, न, इति, समाकुलः, अभूत्, वाम-इतरः, संशयम्, अस्य, बाहुः, केयूर-बन्ध-उच्छ्वसितैः, नुनोद ।

## अन्वयः

तस्याम् उपस्थितायां रघोः सूनुः मां वृणीत न वा इति समाकुलः अभूत् । अस्य वामेतरः बाहुः केयूरबन्धोच्छ्वसितैः संशयं नुनोद ।

# ६.६९ । 6.69

तं प्राप्य सर्वावयवानवद्यं व्यावर्ततान्योपगमात्कुमारी ।
न हि प्रफुल्लं सहकारमेत्य वृक्षान्तरं काङ्क्षति षट्पदाली ॥

## पदविभागः

तम्, प्राप्य, सर्व-अवयव-अनवद्यम्, व्यावर्तत, अन्य-उपगमात्, कुमारी, न, हि, प्रफुल्लम्, सहकारम्, एत्य, वृक्षान्तरम्, काङ्क्षति, षट्पदाली ।

## अन्वयः

कुमारी सर्वावयवानवद्यं तं प्राप्य अन्योपगमात् व्यावर्तत हि षट्पदाली प्रफुल्लं सहकारम् एत्य वृक्षान्तरं न काङ्क्षति ।

# ६.७० । 6.70

तस्मिन्समावेशितचित्तवृत्तिमिन्दुप्रभामिन्दुमतीमवेक्ष्य ।
प्रचक्रमे वक्तुमनुक्रमज्ञा सविस्तरं वाक्यमिदं सुनन्दा ॥

## पदविभागः

तस्मिन्, समावेशित-चित्तवृत्तिम्, इन्दु-प्रभाम्, इन्दुमतीम्, अवेक्ष्य, प्रचक्रमे, वक्तुम्, अनुक्रमज्ञा, सविस्तरम्, वाक्यम्, इदम्, सुनन्दा ।

## अन्वयः

तस्मिन् समावेशितचित्तवृत्तिम् इन्दुप्रभाम् इन्दुमतीम् अवेक्ष्य अनुक्रमज्ञा सुनन्दा इदं सविस्तरं वाक्यं वक्तुं प्रचक्रमे ।

# ६.७१ । 6.71

इक्ष्वाकुवंश्यः ककुदं नृपाणां ककुत्स्थ इत्याहितलक्षणोऽभूत् ।
काकुत्स्थशब्दं यत उन्नतेच्छाः श्लाघ्यं दधत्युत्तरकोसलेन्द्राः ॥

## पदविभागः

इक्ष्वाकु-वंश्यः, ककुदम्, नृपाणाम्, ककुत्स्थः, इति, आहित-लक्षणः, अभूत्, काकुत्स्थ-शब्दम्, यतः, उन्नत-इच्छाः, श्लाघ्यम्, दधति, उत्तर-कोसलेन्द्राः ।

## अन्वयः

इक्ष्वाकुवंश्यः नृपाणां ककुदम् आहितलक्षणः ककुत्स्थः इति कश्चित् अभूत् यतः उन्नतेच्छाः उत्तरकोसलेन्द्राः श्लाघ्यं काकुत्स्थशब्दं दधति ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ

# ६.७२ । 6.72

महेन्द्रमास्थाय महोक्षरूपं यः संयति प्राप्तपिनाकिलीलः ।
चकार बाणैरसुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः ॥

## पदविभागः

महा-इन्द्रम्, आस्थाय, महोक्षरूपम्, यः, संयति, प्राप्त-पिनाकि-लीलः, चकार, बाणैः, असुर-अङ्गनानाम्, गण्डस्थलीः, प्रोषित-पत्र-लेखाः ।

## अन्वयः

यः संयति महोक्षरूपं महेन्द्रम् आस्थाय प्राप्तपिनाकिलीलः सन् बाणैः असुराङ्गनानां गण्डस्थलीः प्रोषितपत्रलेखाः चकार ।

# ६.७३ । 6.73

ऐरावतास्फालनविश्लथं यः सङ्घट्टयन्नङ्गदमङ्गदेन ।
उपेयुषः स्वामपि मूर्तिमग्र्यामर्धासनं गोत्रभिदोऽधितष्ठौ ॥

## पदविभागः

ऐरावत-आस्फालन-विश्लथम्, यः, सङ्घट्टयन्, अङ्गदम्, अङ्गदेन, उपेयुषः, स्वाम्, अपि, मूर्तिम्, अग्र्यम्, अर्धासनम्, गोत्रभिदः, अधितष्ठौ ।

## अन्वयः

यः एरावतास्फालनविश्लथम् अङ्गदम् अङ्गदेन सङ्घट्टयन् स्वाम् अग्र्यां मूर्तिम् उपेयुषः अपि गोत्रभिदः अर्धासनम् अधितष्ठौ ।

# ६.७४ । 6.74

जातः कुले तस्य किलोरुकीर्तिः कुलप्रदीपो नृपतिर्दिलीपः ।
अतिष्ठदेकोनशतक्रतुत्वे शक्राभ्यसूयाविनिवृत्तये यः ॥

## पदविभागः

जातः, कुले, तस्य, किल, उरु-कीर्तिः, कुल-प्रदीपः, नृपतिः, दिलीपः, अतिष्ठत्, एकोनशत-क्रतुत्वे, शक्र-अभ्यसूया-विनिवृत्तये, यः ।

## अन्वयः

उरुकीर्तिः कुलप्रदीपः दिलीपः नृपतिः तस्य कुले जातः किल, यः शक्राभ्यसूयाविनिवृत्तये एकोनशतक्रतुत्वे अतिष्ठत् ।

# ६.७५ । 6.75

यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्त्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम् ॥

## पदविभागः

यस्मिन्, महीम्, शासति, वाणिनीनाम्, निद्राम्, विहार-अर्धपथे, गतानाम्, वातः, अपि, न, अस्त्रंसयत्, अंशुकानि, कः, लम्बयेत्, उदाहरणाय, हस्तम् ।

## अन्वयः

यस्मिन् महीं शासति सति विहारार्धपथे निद्रां गतानां वाणिनीनाम् अंशुकानि वातः अपि न अस्त्रंसयत् आहरणाय कः हस्तं लम्बयेत् ?

# ६.७६ । 6.76

पुत्रो रघुस्तस्य पदं प्रशास्ति महाक्रतोर्विश्वजितः प्रयोक्ता ।
चतुर्दिगावर्जितसम्भृतां यो मृत्पात्रशेषामकरोद्विभूतिम् ॥

## पदविभागः

पुत्रः, रघुः, तस्य, पदम्, प्रशास्ति, महा-क्रतोः, विश्वजितः, प्रयोक्ता, चतुर्दिग्-आवर्जित-सम्भृताम्, यः, मृत्पात्र-शेषाम्, अकरोत्, विभूतिम् ।

## अन्वयः

विश्वजितः महाक्रतोः प्रयोक्ता (दिलीपः) तस्य पुत्रः रघुः पदं प्रशास्ति, यः चतुर्दिगावर्जितसम्भृतां विभूतिं मृत्पात्रशेषाम् अकरोत् ।

# ६.७७ । 6.77

आरूढमद्रीनुदधीन्वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तयालम् ॥

## पदविभागः

आरूढम्, अद्रीन्, उदधीन्, वितीर्णम्, भुजङ्ग-मानाम्, वसतिम्, प्रविष्टम्, ऊर्ध्वम्, गतम्, यस्य, न, च, अनुबन्धि, यशः, परिच्छेत्तुम्, इयत्तया, अलम् ।

## अन्वयः

अद्रीन् आरूढम् उदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम् ऊर्ध्वं गतम् अनुबन्धि च यस्य यशः इयत्तया परिच्छेत्तुं न अलम् ।

# ६.७८ । 6.78

असौ कुमारस्तमजोऽनुजातस्त्रिविष्टपस्येव पतिं जयन्तः ।
गुर्वीं धुरं यो भुवनस्य पित्रा धुर्येण दम्यः सदृशं बिभर्ति ॥

## पदविभागः

असौ, कुमारः, तम्, अजः, अनुजातः, त्रिविष्टपस्य, इव, पतिम्, जयन्तः, गुर्वीम्, धुरम्, यः, भुवनस्य, पित्रा, धुर्येण, दम्यः, सदृशम्, बिभर्ति ।

## अन्वयः

असौ कुमारः त्रिविष्टपस्य पतिं जयन्त इव तम् अनुजातः, दम्यः यः गुर्वीं भुवनस्य धुरं धुर्येण पित्रा सदृशं बिभर्ति ।

# ६.७९ । 6.79

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥

## पदविभागः

कुलेन, कान्त्या, वयसा, नवेन, गुणैः, च, तैः, तैः, विनय-प्रधानैः, त्वम्, आत्मनः, तुल्यम्, अमुम्, वृणीष्व, रत्नम्, समागच्छतु, काञ्चनेन ।

## अन्वयः

कुलेन कान्त्या नवेन वयसा विनयप्रधानैः तैः तैः गुणैः आत्मनः तुल्यम् अमुम् त्वं वृणीष्व, रत्नं काञ्चनेन समागच्छतु ।

# ६.८० । 6.80

ततः सुनन्दावचनावसाने लज्जां तनूकृत्य नरेन्द्रकन्या ।
दृष्ट्या प्रसादामलया कुमारं प्रत्यग्रहीत्संवरणस्रजेव ॥

## पदविभागः

ततः, सुनन्दा-वचन-अवसाने, लज्जाम्, तनूकृत्य, नरेन्द्र-कन्या, दृष्ट्या, प्रसादा-मलया, कुमारम्, प्रत्यग्रहीत्, संवरण-स्रजा, इव ।

## अन्वयः

ततः सुनन्दावचनावसाने नरेन्द्रकन्या लज्जां तनकृत्य प्रसादामलया दृष्ट्या संवरणस्रजा इव कुमारं प्रत्यग्रहीत् ।

# ६.८१ । 6.81

सा यूनि तस्मिन्नभिलाषबन्धं शशाक शालीनतया न वक्तुम् ।
रोमाञ्चलक्ष्येण स गात्रयष्टिं भित्त्वा निराक्रामदरालकेश्याः ॥

## पदविभागः

सा, यूनि, तस्मिन्, अभिलाष-बन्धम्, शशाक, शालीनतया, न, वक्तुम्, रोमाञ्च-लक्ष्येण, सः, गात्रयष्टम्, भित्त्वा, निराक्रामत्, अरालकेश्याः ।

## अन्वयः

सा यूनि तस्मिन् अभिलाषबन्धं शालीनतया वक्तुं न शशाक । अरालकेश्याः सः रोमाञ्चलक्ष्येण गात्रयष्टिं भित्त्वा निराक्रामत् ।

# ६.८२ । 6.82

तथागतायां परिहासपूर्वं सख्यां सखी वेत्रभृताबभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥

## पदविभागः

तथागतायाम्, परिहास-पूर्वम्, सख्याम्, सखी, वेत्रभृत्, आबभाषे, आर्ये, व्रजामः, अन्यतः, इति, अथ, एनाम्, वधूः, असूया-कुटिलम्, ददर्श ।

## अन्वयः

सख्यां तथागतायां सत्यां सखी वेत्रभृत् हे आर्ये अन्यतः व्रजामः इति परिहासपूर्वम् आबभाषे । अथ वधूः एनां असूयाकुटिलं ददर्श ।

# ६.८३ । 6.83

सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयमास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥

## पदविभागः

सा, चूर्ण-गौरम्, रघुनन्दनस्य, धात्री-कराभ्याम्, करभ-उपम-ऊरूः, आसञ्जयामास, यथाप्रदेशम्, कण्ठे, गुणम्, मूर्तम्, इव, अनुरागम् ।

## अन्वयः

करभोपमोरूः सा चूर्णगौरं गुणं मूर्तम् अनुरागम् इव धात्रीकराभ्यां रघुनन्दनस्य कण्ठे यथाप्रदेशम् आसञ्जयामास ।

# ६.८४ । 6.84

तया स्रजा मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया सः ।
अमंस्त कण्ठार्पितबाहुपाशां विदर्भराजावरजां वरेण्यः ॥

## पदविभागः

तया, स्रजा, मङ्गल-पुष्पमय्या, विशाल-वक्षः-स्थल-लम्बया, सः, अमंस्त, कण्ठ-अर्पित-बाहु-पाशाम्, विदर्भ-राज-अवरजाम्, वरेण्यः ।

## अन्वयः

वरेण्यः सः मङ्गलपुष्पमय्या विशालवक्षःस्थललम्बया तया स्रजा विदर्भराजावरजां कण्ठार्पितबाहुपाशाम् अमंस्त ।

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam . Saṃskṛtiḥ . Saṃskāraḥ

# ६.८५ । 6.85

शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्यावतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः ॥

## पदविभागः

शशिनम्, उपगता, इयम्, कौमुदी, मेघमुक्तम्, जल-निधिम्, अनुरूपम्, जह्नु-कन्या, अवतीर्णा, इति, सम-गुण-योग-प्रीतयः, तत्र, पौराः, श्रवण-कटु, नृपाणाम्, एकवाक्यम्, विवव्रुः ।

## अन्वयः

तत्र समगुणयोगप्रीतयः पौराः इयं मेघमुक्तं शशिनम् उपगता कौमुदी अनुरूपं जलनिधिम् अवतीर्णा जलकन्या इति नृपाणां श्रवणकटु एकवाक्यं विवव्रुः ।

# ६.८६ । 6.86

प्रमुदितवरपक्षमेकतस्तत्क्षितिपतिमण्डलमन्यतो वितानम् ।
उषसि सर इव प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रमासीत् ॥

## पदविभागः

प्रमुदित-वरपक्षम्, एकतः, तत्, क्षिति-पति-मण्डलम्, अन्यतः, वितानम्, उषसि, सरः, इव, प्रफुल्ल-पद्मम्, कुमुद-वन-प्रतिपन्न-निद्रम्, आसीत् ।

## अन्वयः

एकतः प्रमुदितवरपक्षम्, अन्यतः वितानं तत् क्षितिपतिमण्डलम्, उषसि प्रफुल्लपद्मं कुमुदवनप्रतिपन्ननिद्रं सरः इव आसीत् ।



**QUESTIONS/DOUBTS?**

**Email us @**

**sanskritfromhome@vyomalabs.in**







- **For downloading course-materials, login @ www.sanskritfromhome.org**
- **Subscribe to our youtube channel @ vyoma-samskrta-pathasala**
- **Buy our Samskrita-learning products @ www.digitalsanskritguru.com**
- **Support our cause for Samskrita-Samskriti @ www.vyomalabs.in**